श्रीगणेशशारदासद्गुरुमंगलमूर्तिभ्यो नमः ॥ यंब्रह्मवेदांतविदोवदंतिपरंप्रधानंपुरुषंतथान्ये ॥ विश्वोद्गतेः कारणमीश्वरंवातस्मैनमोविघ्ननिवारणाय ॥ १ ॥ ॐ अस्यश्रीगुरुगीतामालामंत्रस्य ॥ भगवान्सदाशिवऋषिः ॥ विराट्छंदः ॥ श्रीगुरुपरमात्मादेवता ॥ हंबीजं ॥ सःशक्तिः ॥ सोहंकीलकं ॥ श्रीगुरुकृपाप्रसादसिद्ध्यर्थेजपेविनियोगः ॥ अथकरन्यासः ॥ ॐ हंसांसूर्यात्मनेअंगुष्ठाभ्यांनमः ॥ ॐ हंसींसोमात्मनेतर्जनीभ्यांनमः ॥ ॐ हंसूंनिरंजनात्मनेमध्यमाभ्यांनमः ॥ ॐ हंसैंनिराभासात्मनेअनामिकाभ्यांनमः ॥ ॐ हंसौंअतनुसूक्ष्मात्मनेकनिष्ठिकाभ्यांनमः ॥ ॐ हंसःअव्यक्तात्मनेकरतलकरपृष्ठाभ्यांनमः ॥ इतिकरन्यासः ॥ अथहृदयादिन्यासः ॥ ॐ हंसांसूर्यात्मनेहृदयायनमः ॥ ॐ हंसींसोमात्मनेशिरसेस्वाहा ॥ ॐ हंसूंनिरंजनात्मनेशिखायैवषट् ॥ ॐ हंसैंनिराभासात्मनेकवचायहुं ॥ ॐ हंसौं

अतनुसूक्ष्मात्मनेनेत्रत्रयायवौषट् ॥ ॐ हंसः अव्यक्तात्मनेअ-
स्त्रायफट् ॥ इतिहृदयादिन्यासः ॥ अथध्यानं ॥ हंसाभ्यांपरि-
वृत्तपत्रकमलैर्दिव्यैर्जगत्कारणं । विश्वोत्कीर्णमनेकदेहनिलयंस्व-
च्छंदमानंदकं ॥ आद्यंतैकमखंडचिद्घनरसंपूर्णंह्यनंतंशुभं । प्रत्य-
क्षाक्षरविग्रहंगुरुपदंध्यायेद्विभुंशाश्वतं ॥ १ ॥ विश्वव्यापिनमामि-
देवममलंनित्यंपरन्निष्कलं ॥ नित्योद्बुद्धसहस्रपत्रकमलंल्लुप्ताक्षरे
मंडपे ॥ नित्यानंदमयंसुखैकनिलयंनित्यंशिवंस्वप्रभं ॥ ध्याये-
द्धंसपरंपरात्परतरंस्वच्छंदसर्वागमं ॥ २ ॥ ऊर्ध्वाम्नायगुरोःपदं
त्रिभुवनोंकाराख्यसिंहासनं ॥ सिद्धाचारसमस्तवेदपठितंषट्च-
क्रसंचारणं ॥ अद्वैतस्फुरदग्निमेकममलंपूर्णप्रभाशोभितं ॥ शांतं
श्रीगुरुपंकजंभजमनश्चैतन्यचंद्रोदयं ॥ ३ ॥ नमामिसद्गुरुंशांतं
प्रत्यक्षंशिवरूपिणम् ॥ शिरसायोगपीठस्थंमुक्तिकामार्थसिद्धिदं॥ १
॥ ४ ॥ प्रातःशिरसिशुक्लाब्जेद्विनेत्रंद्विभुजंगुरुं ॥ वराभयकरं

शांतं । स्मरेत्तन्नामपूर्वकं ॥५॥ प्रसन्नवदनाक्षंच । सर्वदेवस्वरूपिणं ॥ तत्पादोदकजांधारां । निपतंतींस्वमूर्धनि ॥६॥ तयासंक्षालयेद्देहे । ह्यंतर्बाह्यगतंमलं ॥ तत्क्षणाद्विरजोमंत्रो । जायते स्फटिकोपमः ॥ ७ ॥ तीर्थानिदक्षिणेपादे । वेदास्तन्मुखमाश्रिताः ॥ पूजयेदर्चितंतंतु । तदभिध्यानपूर्वकं ॥ ८ ॥ सहस्रदलपंकजेसकलशीतरश्मिप्रभं । वराभयकरांबुजंविमलगंधपुष्पांबरं ॥ प्रसन्नवदनेक्षणंसकलदेवतारूपिणं ॥ स्मरेच्छिरसिहंसगंतदभिधानपूर्वगुरुं ॥ ९ ॥ इतिध्यानं ॥ मानसोपचारैः श्रीगुरुंपूजयित्वा ॥ लंपृथिव्यात्मनेगंधतन्मात्राप्रकृत्यानंदात्मने श्रीगुरुदेवायनमः पृथिव्यात्मकंगंधंसमर्पयामि ॥ हंआकाशात्मनेशब्दतन्मात्राप्रकृत्यानंदात्मने श्रीगुरुदेवायनमः आकाशात्मकंपुष्पंसमर्पयामि ॥ यंवाय्वात्मनेस्पर्शतन्मात्राप्रकृत्यानंदात्मने श्रीगुरुदेवायनमः वाय्वात्मकं धूपंसमर्पया-

मि ॥ रंतेजआत्मनेरूपतन्मात्राप्रकृत्यानंदात्मने श्रीगुरुदेवा-
यनमः तेजआत्मकंदीपंसमर्पयामि ॥ वंअबात्मने रसत-
न्मात्वाप्रकृत्यानंदात्मनेश्रीगुरुदेवायनमः अबात्मकंनैवेद्यंसमर्प-
यामि ॥ संसर्वात्मनेसर्वतन्मात्राप्रकृत्यानंदात्मनेश्रीगुरुदेवायन-
मः सर्वात्मकान् सर्वोपचारान्समर्पयामि ॥ ॥ इतिमानसपूजा ॥
अथश्रीगुरुमालामंत्रः ॥ ॐ नमः श्रीगुरुदेवायपरमपुरुषायसर्व-
देवतावशीकराय सर्वारिष्टविनाशायसर्वमंत्रच्छेदनायत्रैलोक्यंव-
शमानयस्वाहा ॥ अचिंत्याव्यक्तरूपाय । निर्गुणायगुणात्मने ॥
समस्तजगदाधारमूर्त्तयेब्रह्मणेनमः ॥ १ ॥ ऋषयऊचुः ॥ गुह्या-
द्गुह्यतरंसारंगुरुगीताविशेषतः ॥ त्वत्प्रसादाच्चश्रोतव्या तत्सर्वंब्रू-
हिसूतनः ॥२॥ सूतउवाच ॥ कैलासशिखरेरम्येभक्तिसाधनहेत-
वे ॥ प्रणम्यपार्वतीभक्त्या । शंकरंपरिपृच्छति ॥ ३ ॥ पार्वत्यु-
वाच ॥ ॐ नमोदेवदेवेश । परात्परजगद्गुरो ॥ सदाशिवमहा-

देव । गुरुदीक्षांप्रयच्छमे ॥ ४ ॥ भगवन्सर्वधर्मज्ञ । व्रतानांव्र-
तनायकम् ॥ ब्रूहिमेकृपयाशंभो । गुरुमाहात्म्यमुत्तमम् ॥ ५ ॥
केनमार्गेणभोःस्वामिन् । देहीब्रह्ममयोभवेत् ॥ तत्कृपांकुरुमेस्वा-
मिन्नमामिचरणौतव ॥ ६ ॥ श्रीमहादेवउवाच ॥ यस्यदेवेप-
राभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाः प्रकाशंतेमहा-
त्मनः ॥ ७ ॥ ममरूपासिदेवित्वं । त्वद्भक्तयर्थंवदाम्यहं ॥ लो-
कोपकारकः प्रश्नो । नकेनापिकृतःपुरा ॥ ८ ॥ योगुरुःसशिवः
प्रोक्तो । यः शिवः स गुरुः स्मृतः ॥ विकल्पंयस्तुकुर्वीत । सन-
रोगुरुतल्पगः ॥ ९ ॥ दुर्लभंत्रिषुलोकेषु । तच्छृणुष्ववदाम्यहं ॥
गुरुंब्रह्मविनानान्यत् । सत्यंसत्यंवरानने ॥ १० ॥ वेदशास्त्रपु-
राणानि । इतिहासादिकानिच ॥ मंत्रयंत्रादिविद्यानां । स्मृति-
रुच्चाटनादिकम् ॥ ११ ॥ शैवशाक्तागमादीनि । ह्यन्येचबहवो
मताः ॥ अपभ्रंशः समस्तानां । जीवानांभ्रांतचेतसाम् ॥ १२ ॥

जपस्तपोव्रतंतीर्थं । यज्ञोदानंतथैवच ॥ गुरुतत्त्वमविज्ञाय । सर्वं व्यर्थंभवेत्प्रिये ॥ १३ ॥ गुरुबुद्ध्यात्मनोनान्यत् । सत्यंसत्यंवरानने ॥ तल्लाभार्थंप्रयत्नस्तु । कर्तव्यश्चमनीषिभिः ॥ १४ ॥ गूढाविद्याजगन्माया । देहमज्ञानसंभवं ॥ विज्ञानंतत्प्रसादेन । गुरुशब्देनकथ्यते ॥ १५ ॥ यदंघ्रिकमलद्वंद्वं । द्वंद्वतापनिवारकं ॥ तारकंभवसिंधौच । श्रीगुरुंप्रणमाम्यहं ॥ १६ ॥ देहीब्रह्म भवेद्यस्मात् । त्वत्कृपार्थंवदामितत् ॥ सर्वपापविशुद्धात्मा । श्रीगुरोः पादसेवनात् ॥ १७ ॥ सर्वतीर्थावगाहस्य । संप्राप्नोतिफलंनरः ॥ गुरोःपादोदकंपीत्वा । शेषंशिरसिधारयन् ॥ १८ ॥ शोषणंपापपंकस्य । दीपनंज्ञानतेजसः ॥ गुरोः पादोदकंसम्यक् । संसारार्णवतारकं ॥ १९ ॥ अज्ञानमूलहरणं । जन्मकर्मनिवारणं ॥ ज्ञानवैराग्यसिद्ध्यर्थं । गुरुपादोदकंपिबेत् ॥ २० ॥ गुरुपादोदकंपानं । गुरोरुच्छिष्टभोजनं ॥ गुरुमूर्तेः सदाध्यानं ।

गुरुस्तोत्रंसदाजपः ॥ २१ ॥ स्वदेशिकस्यैवचनामकीर्तनं । भवे-
दनंतस्यशिवस्यकीर्तनं ॥ स्वदेशिकस्यैवचनामचिंतनं । भवेदनं-
तस्यशिवस्यचिंतनं ॥ २२ ॥ यत्पादरेणुर्वैनित्यं । कोऽपिसंसारवा-
रिधौ ॥ सेतुबंधायतेनाथ । देशिकंतमुपास्महे ॥ २३ ॥ यस्मा-
दनुग्रहंलब्ध्वा । महदज्ञानमुत्सृजेत् ॥ तस्मैश्रीदेशिकेंद्राय ।
नमश्चाभीष्टसिद्धये ॥ २४ ॥ काशीक्षेत्रंनिवासश्च । जान्हवीच-
रणोदकं ॥ गुरुर्विश्वेश्वरःसाक्षात् । तारकंब्रह्मनिश्चितं ॥ २५ ॥
शिरःपादांकितंकृत्वा । गयास्तेचाक्षयोवटः ॥ तीर्थराजप्रयागो
ऽसौ । गुरुमूर्त्यैनमोनमः ॥२६॥ गुरुमूर्तिंस्मरेन्नित्यं । गुरोर्नामस-
दाजपेत् ॥ गुरोराज्ञांप्रकुर्वीत । गुरोरन्यन्नभावयेत्॥२७॥गुरुवक्त्रे
स्थितंब्रह्म । प्राप्यतेतत्प्रसादतः ॥ गुरोर्ध्यानंतथाकुर्यान्नारीवस्वैरि-
णीयथा॥२८॥स्वाश्रमंचस्वजातिंच । स्वकीर्तिंपुष्टिवर्धनम् ॥ एत-
त्सर्वंपरित्यज । गुरोरन्यन्नभावयेत्॥२९॥ अनन्याश्चितयंतोये। सु-

लभंपरमंसुखं॥त स्मात्सर्वंप्रयत्नेन। गुरोराराधनंकुरु॥३०॥गुरुवक्त्रे
स्थिताविद्या । ग़ुरुभक्त्याचलभ्यते ॥ त्रैलोक्येऽस्फुटवक्तारो ।
देवाद्यसुरपन्नगाः ॥ ३१ ॥ गुकारश्चांधकारोहि । रुकारस्तेजउ-
च्यते ॥ अज्ञानग्रासकंब्रह्म । गुरुरेवनसंशयः ॥ ३२ ॥ गुकार-
श्चांधकारस्तु । रुकारस्तन्निरोधकृत् ॥ अंधकारविनाशित्वाद्गुरु-
रित्यभिधीयते ॥ ३३ ॥ गुकारश्चगुणातीतो । रूपातीतोरुकार-
कः ॥ गुणरूपविहीनत्वाद्गुरुरित्यभिधीयते ॥ ३४ ॥ गुकारःप्रथ-
मोवर्णो । मायादिगुणभासकः॥ रुकारोऽस्तिपरब्रह्म ॥ मायाभ्रां-
तिविमोचकम् ॥३५॥ एवंगुरुपदंश्रेष्ठं। देवानामपिदुर्लभं ॥ हा-
हाहूहूगणैश्चैव । गंधर्वाद्यैश्चपूजितं ॥ ३६ ॥ ध्रुवंतेषांचसर्वेषां ।
नास्तितत्त्वंगुरोः परं ॥ गुरोराराधनंकार्यं । स्वजीवित्वंनिवेदये-
त् ॥ ३७ ॥ आसनंशयनंवस्त्रं । वाहनंभूषणादिकं ॥ साधके-
नप्रदातव्यं । गुरुसंतोषकारणं ॥ ३८ ॥ कर्मणामनसावाचा ।

सर्वदाराधयेद्गुरुं ॥ दीर्घदंडंनमस्कृत्य । निर्लज्जोगुरुसन्निधौ ॥
॥ ३९ ॥ शरीरमिंद्रियंप्राणं । अर्थस्वजनबांधवान् ॥ आत्मदारा-
दिकंसर्वं । सद्गुरुभ्योनिवेदयेत् ॥ ४० ॥ गुरुरेकोजगत्सर्वं । ब्र-
ह्मविष्णुशिवात्मकं ॥ गुरोःपरतरंनास्ति । तस्मात्संपूजयेद्गुरुम् ॥
॥ ४१ ॥ सर्वश्रुतिशिरोरत्न । नीराजितपदांबुजं ॥ वेदांतार्थप्र-
वक्तारं । तस्मात्संपूजयेद्गुरुम् ॥४२॥ यस्यस्मरणमात्रेण । ज्ञान-
मुत्पद्यतेस्वयं ॥ सएवसर्वसंपत्तिः । तस्मात्संपूजयेद्गुरुम् ॥४३॥
कृमिकीटभस्मविष्ठा । दुर्गंधिमलमूत्रकं ॥ श्लेष्मरक्तत्वचामांसैः।
नद्धंचैतद्वरानने ॥४४॥ संसारवृक्षमारूढाः । पतंतिनरकार्णवे ॥
यस्तानुद्धरतेसर्वान् । तस्मैश्रीगुरवेनमः ॥ ४५ ॥ गुरुर्ब्रह्मागुरु-
र्विष्णुः । गुरुर्देवोमहेश्वरः ॥ गुरुरेकंपरंब्रह्म । तस्मैश्रीगुरवेनमः॥
॥ ४६ ॥ अज्ञानतिमिरांधस्य । ज्ञानांजनशलाकया ॥ चक्षुरु-
न्मीलितंयेन । तस्मैश्रीगुरवेनमः ॥ ४७ ॥ स्थावरंजंगमंव्याप्तं ।

यत्किंचित्सचराचरं ॥ त्वपदंदर्शितंयेन ॥ तस्मैश्रीगुरवेनमः ॥
॥ ४८ ॥ अखंडमंडलाकारं । व्याप्तंयेनचराचरं ॥ तत्पदंदर्शितं
येन । तस्मैश्रीगुरवेनमः ॥ ४९ ॥ चिन्मयंव्यापितंसर्वं । त्रैलो-
क्यंसचराचरं ॥ असित्वंदर्शितंयेन । तस्मैश्रीगुरवेनमः ॥ ५० ॥
निमिषार्द्धार्द्धपाताद्वा । यद्वाक्याद्वैविलोक्यते ॥ स्वात्मानं
स्थिरमादत्ते । तस्मैश्रीगुरवेनमः ॥ ५१ ॥ चैतन्यंशाश्वतंशांतं ।
व्योमातीतंनिरंजनं ॥ नादबिंदुकलातीतं । तस्मैश्रीगुरवेनमः ॥
॥ ५२ ॥ निर्गुणंनिर्मलंशांतं । जंगमंस्थिरमेवच ॥ व्याप्तंयेन
जगत्सर्वं । तस्मैश्रीगुरवेनमः ॥ ५३ ॥ त्वंपितात्वंचमेमाता ।
त्वंबंधुस्त्वंचदेवता ॥ संसारप्रीतिभंगाय । तस्मैश्रीगुरवेनमः ॥
॥ ५४ ॥ यत्सत्वेनजगत्सत्यं । यत्प्रकाशेनभातियत् ॥ यदा-
नंदेननंदंति । तस्मैश्रीगुरवेनमः ॥ ५५ ॥ यस्मिन्स्थितमिदं ५
सर्वं । भातियद्भानुरूपतः ॥ यत्प्रीत्याप्रियपुत्रादि ॥ तस्मैश्री०

॥५६॥ येनचेतयताहीदं। चित्तंचेतयतेनरः॥ जागृत्स्वप्नसुषुप्त्या-
दि।तस्मै० ॥५७॥ यस्यज्ञानमिदंविश्वं। नदृश्यंभिन्नभेदतः॥
सदैकरूपरूपाय। तस्मैश्रीगुर० ॥ ५८ ॥ यस्याज्ञातंमतंतस्य।
मतंयस्यनवेदसः॥ अनन्यभावभावाय। तस्मैश्रीगुरवेनमः॥
॥ ५९ ॥ यस्मैकारणरूपाय। कार्यरूपेणभातियत्। कार्यका-
रणरूपाय। तस्मैश्रीगु० ॥ ६० ॥ नानारूपमिदंविश्वं। नके-
नाप्यस्तिभिन्नता॥ कार्यकारणरूपाय। तस्मैश्री० ॥ ६१ ॥
ज्ञानशक्तिसमारूढ। तत्त्वमालाविभूषिणे॥ भुक्तिमुक्तिप्रदात्रे
च। तस्मै० ॥ ६२ ॥ अनेकजन्मसंप्राप्तकर्मधर्मविदाहिने॥
ज्ञानानलप्रभावेन। तस्मै० ॥ ६३ ॥ शोषणंभवसिंधोश्च। दी-
पनंक्षरसंपदां॥ गुरोःपादोदकंयस्य। तस्मैश्री० ॥ ६४ ॥ न
गुरोरधिकंतत्त्व। नगुरोरधिकंतपः॥ तत्त्वंज्ञानात्परंनास्ति। त-
स्मैश्रीगुर० ॥ ६५ ॥ मन्नाथः श्रीजगन्नाथो। मद्गुरुःश्रीजगद्गु-

रुः ॥ स्वात्मैवसर्वभूतात्मा । तस्मैश्रीगुरवे० ॥ ६६ ॥ गुरुरादि-
रनादिश्च । गुरुःपरमदैवतं ॥ गुरुर्मंत्रसमोनास्ति । तस्मैश्री
गुरवेनमः ॥ ६७ ॥ एकएवपरोबंधुर्विषमेसमुपस्थिते ॥ गुरुःस-
कलधर्मात्मा । तस्मैश्रीगुरुवेनमः ॥ ६८ ॥ गुरुमध्येस्थितंविश्वं ।
विश्वमध्येस्थितंगुरुं ॥ गुरुर्विश्वंनमस्तेऽस्तु । तस्मैश्री० ॥६९॥
भवारण्यप्रविष्टस्य । दिङ्मोहभ्रांतिचेतसः ॥ येनसंदर्शितःपं-
थाः । तस्मैश्री० ॥ ७० ॥ तापत्रयाग्नितप्तानाम् । अशांतप्राणि-
नांमुने । गुरुरेवपरागंगा ॥ तस्मैश्रीगुरवे० ॥७१ ॥ अज्ञानेना-
हिनाग्रस्ताः । प्राणिनस्तान्चिकित्सकः ॥ विद्यास्वरूपोभगवा-
न् । तस्मैश्री० ॥ ७२ ॥ हेतवेजगतामेव । संसारार्णवसेतवे ॥
प्रभवेसर्वविद्यानांशंभवेगुरवेनमः ॥ ७३ ॥ ध्यानमूलंगुरोर्मूर्तिः ।
पूजामूलंगुरोःपदं ॥ मंत्रमूलंगुरोर्वाक्यं । मुक्तिमूलंगुरोःकृपा ॥
॥ ७४ ॥ सप्तसागरपर्यंतं । तीर्थस्नानफलंयथा ॥ गुरुपादोद-

बिंदोश्च । सहस्रांशेनतत्फलं ॥ ७५ ॥ शिवेरुष्टेगुरुस्त्राता । गु-
रौरुष्टेनकश्चन । लब्ध्वाकुलगुरुंसम्यक् । गुरुमेवसमाश्रयेत् ॥७६॥
मधुलुब्धोयथाभृंगः । पुष्पात्पुष्पांतरंव्रजेत् । ज्ञानलुब्धस्त-
थाशिष्यो । गुरोर्गुर्वंतरंव्रजेत ॥ ७७ ॥ वंदेगुरुपदद्वंद्वं । वाङ्म-
नोऽतीतगोचरं ॥ श्वेतरक्तप्रभाभिन्नं । शिवशक्त्यात्मकंपरं ॥
॥ ७८ ॥ गुकारंचगुणातीतं । रुकारंरूपवर्जितं ॥ गुणातीतम-
रूपंच । योदद्यात्सगुरुः स्मृतः ॥७९॥ अत्रिनेत्रःशिवःसाक्षात् ।
द्विबाहुश्चहरिःस्मृतः ॥ योऽचतुर्वदनोब्रह्मा । श्रीगुरुः कथितः
प्रिये ॥ ८० ॥ अयंमयांजलिर्बद्धो । दयासागरसिद्धये ॥ य-
दनुग्रहतोजंतुःचित्रसंसारमुक्तिभाक् ॥ ८१ ॥ श्रीगुरोः परमंरू-
पं । विवेकंचक्षुरग्रतः ॥ मंदभाग्यानपश्यंति । अंधाः सूर्योद-
यंयथा ॥८२॥ कुलानांकुलकोटीनां । तारकस्तत्रतत्क्षणात् ॥ अ-
तस्तंसद्गुरुंज्ञात्वा । त्रिकालमभिवंदयेत् ॥८३॥ श्रीनाथचरणद्वंद्वं ।

यस्यांदिशिविराजते।तस्यांदिशिनमस्कुर्यात्।भक्त्याप्रतिदिनंप्रि-
ये ८४साष्टांगप्रणिपातेन।स्तुवन्नित्यंगुरुंभजेत् । भजनात्स्थैर्यमा-
प्नोति । स्वस्वरूपमयोभवेत्॥८५॥दोर्भ्यांपभ्द्यांचजानुभ्यां।उरसा-
शिरसादृशा॥ मनसावचसाचेति । प्रणामोऽष्टांगउच्यते॥८६॥
तस्यैदिशेसततमंजलिरेषनित्यं । प्रक्षिप्यतेमुखरितैर्मधुरैःप्रसूनैः॥
जागर्तियत्रभगवान्गुरुचक्रवर्ती । विश्वस्थितिप्रलयनाटकनित्य-
साक्षी ॥ ८७ ॥ अभ्यस्तैःकिमुदीर्घकालविमलैर्व्याधिप्रदैर्दुष्करैः।
प्राणायामशतैरनेककरणैर्दुःखात्मकैर्दुर्जयैः ॥ यस्मिन्नभ्युदितेवि-
नश्यतिबलीवायुः स्वयंतत्क्षणात् ॥ प्राप्यस्तत्सहजस्वभावमनि-
शंसेवेतमेकंगुरुं ॥ ८८ ॥ ज्ञानंविनामुक्तिपदं । लभ्यतेगुरुभक्ति-
तः । गुरोःसमान्यतोनान्यत् । साधनंगुरुमार्गिणां ॥ ८९ ॥
यस्मात्परतरंनास्ति । नेतिनेतीतिवैश्रुतिः ॥ मनसावचसाचैव ।
सत्यमाराधयेद्गुरुं ॥ ९० ॥ गुरोःकृपाप्रसादेन । ब्रह्मविष्णुमहेश्व-

राः ॥ सामर्थ्यंतत्प्रसादेन । केवलंगुरुसेवया ॥९१॥ देवकिन्नर-
गंधर्वाः । पितृयक्षास्तुतुंबरुः ॥ मुनयोऽपिनजानंति । गुरुशुश्रू-
षणेविधिं ॥ ९२ ॥ महाहंकारगर्वेण । तपोविद्याबलेनच ॥
भ्रमत्येतस्मिन्संसारे । घटियंत्रंयथापुनः ॥ ९३ ॥ नमुक्तागण-
गंधर्वाः । पितृयक्षास्तुचारणाः॥ ऋषयःसिद्धदेवाद्याः । गुरुसेवाप-
राङ्मुखाः ॥ ९४ ॥ ध्यानंशृणुमहादेवि । सर्वानंदप्रदायकं ॥
सर्वसौख्यकरंचैव । भुक्तिमुक्तिप्रदायकं ॥ ९५ ॥ श्रीमत्परंब्रह्म-
गुरुंस्मरामि । श्रीमत्प० गुरुंभजामि ॥ श्रीम० गुरुंवदामि । श्री-
मत्परंब्रह्मगुरुंनमामि ॥ ९६ ॥ ब्रह्मानंदंपरमसुखदंकेवलंज्ञानमू-
र्तिं । द्वंद्वातीतंगगनसदृशंतत्त्वमस्यादिलक्ष्यं ॥ एकंनित्यंविम-
लमचलं सर्वधीसाक्षिभूतं । भावातीतंत्रिगुणरहितं सद्गुरुंतन्न-
मामि ॥ ९७ ॥ हृदंबुजेकर्णिकमध्यसंस्थं । सिंहासनेसंस्थित-
दिव्यमूर्त्तिं ॥ ध्यायेद्गुरुंचंद्रकलाप्रकाशं । सच्चित्सुखाभीष्टवरंद-

धानं ॥ ९८ ॥ श्वेतांबरंश्वेतविलेपपुष्पं । मुक्ताविभूषंमुदितंद्वि-
नेत्रं ॥ वामांकपीठेस्थितदिव्यशक्तिं । मंदस्मितंपूर्णकृपानिधा-
नं ॥ ९९ ॥ आनंदमानंदकरंप्रसन्नं । ज्ञानस्वरूपंनिजभावयु-
क्तं ॥ योगींद्रमीड्यंभवरोगवैद्यं । श्रीमद्गुरुंनित्यमहंनमामि ॥
॥ १०० ॥ वंदेगुरूणांचरणारविंदं । संदर्शितस्वात्मसुखांबुधी-
नां ॥ जनस्ययेषांगलिकायमानं । संसारहालाहलमोहशांत्यै ॥
॥ १०१ ॥ यस्मिन्सृष्टिस्थितिध्वंस । निग्रहानुग्रहात्मकं ॥ कृ-
त्यंपंचविधंशश्वत् । भासतेतंगुरुंभजेत् ॥१०२॥ पादाब्जेसर्वसंसा-
र । दावकालानलंस्वके ॥ ब्रह्मरंध्रेस्थितांभोज । मध्यस्थंचंद्रमं-
डलं ॥१०३॥ अकथादित्रिरेखाब्जे । सहस्रदलमंडले ॥ हंसपार्श्व-
त्रिकोणेच । स्मरेत्तन्मध्यगंगुरुं ॥१०४॥ नित्यंशुद्धंनिराभासं । नि-
राकारंनिरंजनं ॥ नित्यबोधचिदानंदं ॥ गुरुंब्रह्मनमाम्यहम् ॥१०५॥
सकलभुवनसृष्टिः कल्पिताशेषसृष्टिर्निखिलनिगमदृष्टिः सत्पदा-

थैंकसृष्टिः॥अथगणपरमेष्ठी सत्पदार्थैकसृष्टिर्भवगुणपरमेष्ठीमोक्षमा-
गैंकदृष्टिः ॥ १०६॥ सकलभुवनभंगस्थापनास्तंभयष्टिः। सकरु-
णरसवृष्टिस्तत्त्वमालासमष्टिः ॥ सकलसमयसृष्टिः सच्चिदानं-
दहृष्टिर्निवसतुमयिनित्यंश्रीगुरोर्दिव्यदृष्टिः ॥ १०७॥ नगुरो-
रधिकं न गुरोरधिकं। नगुरोरधिकं नगुरोरधिकं ॥ शिव-
शासनतः शिवशासनतः। शिवशासनतः शिवशासनतः ॥
॥ १०८ ॥ इदमेवशिवं इदमेवशिवं । इदमेवशिवं इदमे-
वशिवं ॥ ममशासनतो ममशासनतो ममशासनतो मम-
शासनतः ॥ १०९ ॥ विदितंविदितंविदितंविदितं । विज-
नंविजनंविजनंविजनं॥ हरिशासनतोहरिशासनतोहरिशासन-
तोहरिशासनतः ॥ ११० ॥ एवंविधंगुरुंध्यात्वा । ज्ञानमुत्प-
द्यतेस्वयं ॥ तदागुरूपदेशेन । मुक्तोऽहमितिभावयेत् ॥१११॥
गुरूपदेशितैर्मार्गैः। मनःशुद्धिंतुकारयेत् ॥ अनित्यंखंडयेत्सर्वं ।

यत्किंचिदात्मगोचरं ॥ ११२ ॥ ज्ञेयंसर्वमतीतंच । ज्ञानंचमन
उच्यते ॥ ज्ञानंज्ञेयंसमंकृत्वा । यथानान्यद्द्वितीयकं ॥ ११३ ॥
किमत्रबहुनोक्तेन । शास्त्रकोटिशतैरपि ॥ दुर्लभाचित्तविश्रांतिः
विनागुरुकृपांपराम् ॥ ११४ ॥ करुणाखड्गपातेन । च्छित्वापाशा-
ष्टकंशिशोः ॥ सम्यगानंदजनकः । सद्गुरुःसोऽभिधीयते ॥ ११५ ॥
एवंश्रुत्वामहादेवि । गुरुनिंदांकरोतियः ॥ सयातिनरकान्घो-
रान् । यावच्चंद्रदिवाकरौ ॥ ११६ ॥ यावत्कल्पांतकोदेहस्तावद्दे-
विगुरुंस्मरेत् ॥ गुरुलोपोनकर्तव्यः । स्वच्छंदोयदिवाभवेत् ॥
॥ ११७ ॥ हुंकारेणनवक्तव्यं । प्राज्ञाशिष्यैः कदाचन ॥ गुरोर-
ग्रेनवक्तव्यं । असत्यंतुकदाचन ॥ ११८ ॥ गुरुंत्वंकृत्यहुंकृत्य ।
गुरुसान्निध्यभाषणः ॥ अरण्येनिर्जलेदेशे । सभवेद्ब्रह्मराक्षसः
॥ ११९ ॥ गुरुकार्यंनलंघेत । नापृष्ट्वाकार्यमाचरेत् ॥ नह्युत्तिष्ठे-
द्दिशेऽनत्वा । गुरुसद्भावशोभितः ॥ १२० ॥ नगुरोराश्रमेकुर्या

द्दुःपानंपरिसर्पणं ॥ दीक्षाव्याख्याप्रभुत्वादि । गुरोराज्ञांनकार-
येत् ॥ १२१ ॥ नोपाश्रमंचपर्यंकंनचपादप्रसारणं ॥नांगभोगा-
दिकंकुर्यान्नलीलामपरामपि ॥ १२२ ॥ गुरूणांसदसद्वापि ।
यदुक्तंतन्नलंघयेत् ॥ कुर्वन्नाज्ञांदिवारात्रौ । दासवन्निवसेद्गुरौ ॥
॥ १२३ ॥ अदत्तंनगुरोर्द्रव्यं । उपभुंजीतकर्हिचित् ॥ दत्तंच-
रंकवद्ग्राह्यं । प्राणोप्येतेनलभ्यते ॥ १२४ ॥ पादुकासनश-
य्यादि । गुरुणायदधिष्ठितं ॥ नमस्कुर्वीततत्सर्वं । पादाभ्यांन
स्पृशेत्कचित्॥१२५॥गच्छतःपृष्ठतोगच्छेत् ।गुरुच्छायांनलंघयेत्॥
नोल्बणंधारयेद्वेषं । नालंकारांस्तथोल्बणान् ॥१२६॥गुरुनिंदाक-
रंदृष्ट्वा । धावयेदथवासयेत्॥ स्थानंवातत्परित्याज्यं । जिव्हाछे-
दाक्षमोयदि ॥ १२७ ॥ नोच्छिष्टंकस्यचिद्देयं । गुरोराज्ञांन
चत्यजेत् ॥ कृत्स्नमुच्छिष्टमादाय । नित्यमेवव्रजेद्बहिः ॥१२८॥
नानृतंनाप्रियंचैव । नगर्वान्नापिवाबहु ॥ ननियोगपरंब्रूयाद्गुत् ।

गुरोराज्ञांविभावयेत् ॥१२९॥ प्रभोदेवकुलेशान । स्वामिन्राज-
न्कुलेश्वर ॥ इतिसंबोधनैर्भीतो । गुरुभावेनसर्वदा ॥१३०॥ मु-
निभिःपन्नगैर्वापि। सुरैर्वाशापितोयदि ॥ कालमृत्युभयाद्वापि ।
गुरुःसंत्रातिपार्वति ॥ १३१ ॥ अशक्ताहिसुराद्याश्च । अशक्ता
मुनयस्तथा ॥ गुरुशापप्रपन्नस्य । रक्षणायचकुत्रचित् ॥१३२॥
मंत्रराजमिदंदेवी । गुरुरित्यक्षरद्वयं ॥ स्मृतिवेदार्थवाक्यानां ॥
गुरुःसाक्षात्परंपदं ॥ १३३ ॥ सत्कारमानपूजार्थं । दंडकाषाय-
धारणः ॥ ससंन्यासीनवक्तव्यः । संन्यासीज्ञानतत्परः ॥१३४॥
विजानंतिमहावाक्यं । गुरोश्चरणसेवया ॥ तेवैसंन्यासिनःप्रो-
क्ता । इतरेवेषधारिणः ॥१३५॥ नित्यंब्रह्मनिराकारं । निर्गुणंबोध-
येत्परं ॥ भासयन्ब्रह्मभावंयो । दीपोदीपांतरंयथा ॥ १३६ ॥ 
गुरुप्रसादतःस्वात्मन्यात्मारामनिरीक्षणात् ॥ समतामुक्तिमार्गे-
ण । स्वात्मज्ञानंप्रवर्तते ॥ १३७ ॥ आब्रह्मस्तंभपर्यंतं । परमा-

त्मस्वरूपकं ॥ स्थावरंजंगमंचैव । प्रणमामिजगन्मयं ॥ १३८॥
वंदेऽहंसच्चिदानंदं । भावातीतंजगद्गुरुम् ॥ नित्यंपूर्णंनिराकारं ।
निर्गुणंस्वात्मसंस्थितं॥१३९॥ परात्परतरंध्यायेत् । नित्यमानंदका-
रकं ॥ हृदयाकाशमध्यस्थं । शुद्धस्फटिकसन्निभं ॥१४०॥ स्फ-
टिकेस्फाटिकंरूपं । दर्पणेदर्पणोयथा ॥तथात्मनिचिदाकारा आनं-
दंसोऽहमित्युत ॥१४१॥रूपातीतंहिपुरुषं । ध्यायतेचिन्मयंहृदि ॥
तत्रस्फुरतियोभावः । शृणुतत्कथयामिते ॥ १४२ ॥ अजोऽहम-
मरोऽहंच । अनादिनिधनोह्यहं ॥ अविकारश्चिदानंदो । ह्य-
णीयान्महतोमहान् ॥ १४३ ॥ अपूर्वमपरन्नित्यं । स्वयंज्योति-
र्निरामयं ॥ विरजंपरमाकाशं । ध्रुवमानंदमव्ययं ॥ १४४ ॥
अगोचरंतथाऽगम्यं । नामरूपविवर्जितं ॥ निःशब्दंतुविजानी-
यात्स्वभावाद्ब्रह्मपार्वति ॥ १४५ ॥ यथागंधस्वभावत्वं । कर्पू-
रकुसुमादिषु ॥ शीतोष्णत्वस्वभावत्वं । तथाब्रह्मणिशाश्वतं ॥

॥ १४६ ॥ यथानिजस्वभावेन । कुंडलेकटकादयः ॥ सुवर्णत्वे-
नतिष्ठंति । तथाहंब्रह्मशाश्वतं ॥ ४७ ॥ स्वयंतथाविधोभूत्वा ।
स्थातव्यंयत्रकुत्रचित्॥कीटोभृंगइवध्यानात् ।यथाभवतितादृशः।
॥४८॥ गुरुध्यानात्तथास्वांते । स्वयंब्रह्ममयोभवेत् ॥ पिंडेपदेतथा
रूपे । मुक्तोऽसौनात्रसंशयः ॥ १४९ ॥ पार्वत्युवाच ॥ पिंडं
किंतुमहादेव । पदंकिंसमुदाहृतं । रूपातीतंचरूपंकिं । एतदा-
ख्याहिशंकर ॥ १५० ॥ श्रीमहादेवउवाच ॥ पिंडेकुंडलिनीश-
क्तिः । पदंहंसमुदाहृतं ॥ रूपंबिंदुरितिज्ञेयं । रूपातीतंनिरंज-
नं ॥ १५१ ॥ पिंडेमुक्ताः पदेमुक्ता । रूपेमुक्तावरानने ॥
रूपातीतेषुयेमुक्ताः। तेमुक्तानात्रसंशयः ॥ ५२ ॥ गुरोर्ध्याने-
नेतिनित्यं । देहीब्रह्ममयोभवेत् ॥ स्थितश्चयत्रकुत्रापि । मुक्तो
ऽसौनात्रसंशयः ॥ ५३ ॥ ज्ञानंवैराग्यमैश्वर्यं । यशःश्रीःसमु-
दाहृतं ॥ षड्गुणैश्वर्ययुक्तश्च । भगवान्श्रीगुरुःप्रिये ॥ ५४ ॥

गुरुःशिवोगुरुर्देवो । गुरुर्बंधुःशरीरिणां ॥ गुरुरात्मागुरुर्जीवो ।
गुरोरन्यन्नविद्यते ॥ ५५ ॥ एकाकीनिःस्पृहःशांतः । चिंतासू-
याविवर्जितः ॥ बाल्यभावेनयोभाति । ब्रह्मज्ञानीसउच्यते ॥
॥ ५६ ॥ नसुखंवेदशास्त्रेषु । नसुखंमंत्रयंत्रके ॥ गुरोःप्रसादा-
दन्यत्र । सुखंनास्तिमहीतले ॥ ५७ ॥ चार्वाकवैष्णवमते ।
सुखंप्राभाकरेनहि ॥ गुरोःपादांतिकेयद्वत् । सुखंवेदांतसमतं ॥
॥ ५८ ॥ नतत्सुखंसुरेंद्रस्य । नसुखंचक्रवर्तिनां ॥ यत्सुखंवीत-
रागस्य । मुनेरेकांतवासिनः ॥ ५९ ॥ रसंब्रह्मपिबेद्यश्च । तृप्तो
यःपरमात्मनि ॥ इंद्रंचमन्यतेरंकं । नृपाणांतत्रकाकथा ॥६०॥
एकएवाद्वितीयोऽहं । गुरुवाक्येननिश्चितः ॥ एवमभ्यस्यतानि-
त्यं । नसेव्यंवैवनांतरं ॥ ६१ ॥ अभ्यासान्निमिषेणैव । समा-
धिमधिगच्छति ॥ आजन्मजनितंपापं । तत्क्षणादेवनश्यति ॥
॥ ६२ ॥ किमावाहनमव्यक्ते । व्यापकेकिंविसर्जनं ॥ अमूर्तौ

चकथंपूजा । कथंध्यानंनिरामये ॥ ६३ ॥ गुरुर्विष्णुःसत्त्वमयो ।
राजसश्चतुराननः ॥ तामसोरुद्ररूपेण । सृजत्यवतिहंतिच ॥
॥ १६४ ॥ स्वयंब्रह्ममयोभूत्वा । तत्परंचावलोकयेत् ॥ परा-
त्परतरंनान्यत् । सर्वगंतन्निरामयं ॥ ६५ ॥ तस्यावलोकनंप्रा-
प्य । सर्वसंगविवर्जितः॥ एकाकीनिस्पृहःशान्तः । स्थातावै-
तत्प्रसादतः ॥ ६६ ॥ लब्धंवाथनलब्धंवा । स्वल्पंवाबहुलं-
तथा ॥ निष्कामेनैवभोक्तव्यं । सदासंतुष्टमानसं ॥ ६७ ॥
सर्वज्ञंपदमित्याहुः । देहीसर्वमयोभुवि ॥ सदानंदःसदाशांतो ।
रमतेयत्रकुत्रचित् ॥ ६८ ॥ यत्रैवतिष्ठतेसोऽपि । सदेशःपुण्य-
भाजनः ॥ मुक्तस्यलक्षणंचैव । तवाग्रेकथितंमया ॥ ६९ ॥ उ-
पदेशस्त्वयंदेवि । गुरुमार्गेणमुक्तिदः ॥ गुरुभक्तिस्तथात्यंता ।
कर्तव्यावैमनीषिभिः ॥ १७० ॥ नित्ययुक्ताश्रयःसर्वो । वेदकृ-
त्सर्ववेदकृत् ॥ स्वपरज्ञानदाताच । तंवंदेगुरुमीश्वरं ॥ १७१ ॥

यद्यप्यधीतानिगमाः । षडंगान्यागमाः प्रिये ॥ अध्यात्मादीनि
शास्त्राणि । ज्ञानंनास्तिगुरुंविना ॥ ७२ ॥ निरस्तसर्वसंदेहो ।
एकीकृत्यसुदर्शनं ॥ रहस्यंयोदर्शयाति । भजामिगुरुमीश्वरं ॥
॥ ७३ ॥ ज्ञानहीनोगुरुस्त्याज्यो । मिथ्यावादीविडंबकः ॥
स्वविश्रांतिंनजानाति । परशांतिंकरोतिकिं ॥ ७४ ॥ शिला-
याः किंपरंज्ञानं । शिलासंघप्रतारणे ॥ स्वयंतर्तुंनजानाति । परं
निस्तारयेत्कथं ॥७५॥ नवंदनीयास्तेकष्टं । दर्शनात्भ्रांतिका-
रकाः ॥ वर्जयेत्तान्गुरून्दूरे । धीरस्यतुसमाश्रयेत् ॥ १७६ ॥ पा-
खंडिनःपापरताः ॥ नास्तिकाभेदबुद्धयः ॥स्त्रीलंपटादुराचाराः ।
कृतघ्नाबकवृत्तयः ॥ १७७ ॥ कर्मभ्रष्टाःक्षमानष्टाः । निंद्यतर्कैश्च
वादिनः ॥ कामिन. क्रोधिनश्चैव । हिंसाचंडाः शठास्तथा ॥
॥ ७८ ॥ ज्ञानलुप्तानकर्तव्या ॥ महापापास्तथाप्रिये ॥ एभ्यो
भिन्नोगुरुःसेव्यः । एकभक्त्याविचार्यच ॥ ७९ ॥ शिष्यादन्य-

चकथंपूजा । कथंध्यानंनिरामये ॥ ६३ ॥ गुरुर्विष्णुःसत्त्वमयो ।
राजसश्चतुराननः ॥ तामसोरुद्ररूपेण । सृजत्यवतिहंतिच ॥
॥ १६४ ॥ स्वयंब्रह्ममयोभूत्वा । तत्परंचावलोकयेत् ॥ परा-
त्परतरंनान्यत् । सर्वगंतन्निरामयं ॥ ६५ ॥ तस्यावलोकनंप्रा-
प्य । सर्वसंगविवर्जितः॥ एकाकीनिस्पृहःशान्तः । स्थातावैं-
तत्प्रसादतः ॥ ६६ ॥ लब्धंवाथनलब्धंवा । स्वल्पंवाबहुलं-
तथा ॥ निष्कामेनैवभोक्तव्यं । सदासंतुष्टमानसं ॥ ६७ ॥
सर्वज्ञंपदमित्याहुः । देहीसर्वमयोभुवि ॥ सदानंदःसदाशांतो ।
रमतेयत्रकुत्रचित् ॥ ६८ ॥ यत्रैवतिष्ठतेसोऽपि । सदेशःपुण्य-
भाजनः ॥ मुक्तस्यलक्षणंचैव । तवाग्रेकथितंमया ॥ ६९ ॥ उ-
पदेशस्त्वयंदेवि । गुरुमार्गेणमुक्तिदः ॥ गुरुभक्तिस्तथात्यंता ।
कर्तव्यावैमनीषिभिः ॥ १७० ॥ नित्ययुक्ताश्रयःसर्वो । वेदकृ-
त्सर्ववेदकृत् ॥ स्वपरज्ञानदाताच । तंवंदेगुरुमीश्वरं ॥ १७१ ॥ १२

यद्यप्यधीतानिगमाः । षडंगान्यागमाः प्रिये ॥ अध्यात्मादीनि
शास्त्राणि । ज्ञानंनास्तिगुरुंविना ॥ ७२ ॥ निरस्तसर्वसंदेहो ।
एकीकृत्यसुदर्शनं ॥ रहस्यंयोदर्शयाति । भजामिगुरुमीश्वरं ॥
॥ ७३ ॥ ज्ञानहीनोगुरुस्त्याज्यो । मिथ्यावादीविडंबकः ॥
स्वविश्रांतिंनजानाति । परशांतिंकरोतिकिं ॥ ७४ ॥ शिला-
याः किंपरंज्ञानं । शिलासंघप्रतारणे ॥ स्वयंतर्तुंनजानाति । परं
निस्तारयेत्कथं ॥७५॥ नवंदनीयास्तेकष्टं । दर्शनात्भ्रांतिका-
रकाः ॥ वर्जयेत्तान्गुरून्दूरे । धीरस्यतुसमाश्रयेत् ॥ १७६ ॥ पा-
खंडिनःपापरताः ॥ नास्तिकाभेदबुद्धयः ॥स्त्रीलंपटादुराचाराः ।
कृतघ्नाबकवृत्तयः ॥ १७७ ॥ कर्मभ्रष्टाःक्षमानष्टाः । निंद्यतर्कैश्च
वादिनः ॥ कामिन· क्रोधिनश्चैव । हिंसाचंडाःशठास्तथा ॥
॥ ७८ ॥ ज्ञानलुप्तानकर्तव्या ॥ महापापास्तथाप्रिये ॥ एभ्यो
भिन्नोगुरुःसेव्यः । एकभक्त्याविचार्यच ॥ ७९ ॥ शिष्यादन्य-

त्रदेवेशि । नवदेद्यस्यकस्यचित् ॥ नराणांचफलप्राप्तौ । भक्ति-
रेवहिकारणं ॥१८०॥ गूढाद्दृढाश्चप्रीताश्च। मौनेनसुसमाहिताः ॥
सकृत्कामगतोवापि । पंचधागुरुरीरितः ॥ ८१ ॥ सर्वंगुरुमुखा-
ल्लब्धं । सफलंपापनाशनं ॥ यद्यदात्महितंवस्तु । तत्तद्द्रव्यंन
वंचयेत् ॥ १८२ ॥ गुरुदेवार्पणंवस्तु । तेनतुष्टोस्मिसुव्रते ॥
श्रीगुरोःपादुकांमुद्रां । मूलमंत्रंचगोपयेत् ॥ १८३ ॥ नताःस्मते
नाथपदारविंदं । बुद्धींद्रियप्राणमनोवचोभिः। यच्चिंत्यतेभावतदा-
त्मयुक्तौ । मुमुक्षुभिःकर्ममयोपशांति ॥ ८४ ॥ अनेनयद्भवे-
त्कार्यं । तद्वदामितवप्रिये ॥ लोकोपकारकंदेवि । लौकिकंतुवि-
वर्जयेत् ॥ ८५ ॥ लौकिकाद्धर्मतोयाति । ज्ञानहीनोभवार्णवे ।
ज्ञानभावेचयत्सर्वं । कर्मनिष्कर्मशाम्यति ॥ ८६ ॥ इमांतुभक्ति
भावेन । पठन्वैश्रृणुयादपि ॥ लिखित्वायत्प्रदानेन । तत्सर्वंफ-
लमश्नुते ॥ ८७ ॥ गुरुगीतामिमांदेवि । हृदिनित्यंविभावय ॥

महाव्याधिगतैर्दुखैः । सर्वदाप्रजपेन्मुदा ॥ १८८ ॥ गुरुगीता-
क्षरैकैकं । मंत्रराजमिदंप्रिये ॥ अन्येचविविधामंत्राः । कलांना-
र्हंतिषोडशीम् ॥ १८९ ॥ अगाधंफलमाप्नोति । गुरुगीताजपेन
तु ॥ सर्वपापहरादेवि । सर्वदारिद्यनाशिनी ॥ १९० ॥ काल-
मृत्युहराचैव । सर्वसंकटनाशिनी ॥ यक्षराक्षसभूतादि ।
चोरव्याघ्रविघातिनी ॥ ९१ ॥ सर्वोपद्रवकुष्ठादि । दुष्ट-
दोषनिवारिणी ॥ यत्फलंगुरुसानिध्यात् । तत्फलंपठनाद्भवेत् ॥
॥ ९२ ॥ महाव्याधिहराः सर्वाः । विभूतिः सिद्धिदाभवेत् ॥
अथवामोहनेवश्ये । स्वयमेवजपेत्सदा ॥ ९३ ॥ कुशदूर्वासने
देवि । ह्यासनेशुभ्रकंबले ॥ उपविश्यततोदेवि । जपेदेकाग्रमा-
नसः ॥ १९४ ॥ शुक्लंसर्वत्रवैप्रोक्तं । वश्येरक्तासनंप्रिये ॥
पद्मासनेजपेन्नित्यं । शांतिवश्यकरंपरं ॥ ॥ १९५ ॥ वस्त्रासनेच
दारिद्र्यं । पाषाणेरोगसंभवः ॥ मेदिन्यांदुःखमाप्नोति । काष्ठेभ-

वतिनिष्फलम् ॥ ९६ ॥ कृष्णाजिनेज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रच-
र्मणि ॥ कुशासनेज्ञानसिद्धिः सर्वसिद्धिस्तुकंबले ॥ ९७ ॥ आ-
ग्नेयांकर्षणंचैव । वायव्यांशत्रुनाशनं ॥ नैर्ऋत्यांदर्शनंचैव ।
ईशान्यांज्ञानमेवच ॥ ९८ ॥ उदङ्मुखःशांतिजाप्ये । वश्येपूर्व-
मुखस्तथा ॥ याम्येतुमारणंप्रोक्तं । पश्चिमेचधनागमः ॥ ९९ ॥
मोहनंसर्वभूतानां । वंधमोक्षकरंपरं ॥ देवराज्ञांप्रियकरं । राजानंव-
शमानयेत् ॥ २०० ॥ मुखस्तंभकरंचैव । गुणानांचविवर्धनं ॥ दुष्कर्म
नाशनंचैव । तथासत्कर्मसिद्धिदं ॥ २०१ ॥ असिद्धंसाधयेत्कार्यं
नवग्रहभयावहं ॥ दुःस्वप्ननाशनंचैव । सुस्वप्नफलदायकं ॥ २ ॥
सर्वशांतिकरंनित्यं । तथावंध्यासुपुत्रदं ॥ अवैधव्यकरंस्त्रीणां ।
सौभाग्यस्यविवर्द्धनं ॥ ३ ॥ आयुरारोग्यमैश्वर्यं । पुत्रपौत्रवि-
वर्धनं ॥ निष्कामजापीविधवा । पठेन्मोक्षमवाप्नुयात् ॥ ४ ॥
अवैधव्यंसकामातु । लभतेचान्यजन्मनि ॥ सर्वदुःखभयंविघ्नं ।

नाशयेत्तापहारकं ॥ ५ ॥ सर्वपापप्रशमनं । धर्मकामार्थमोक्षदं
॥ यंयंचिंतयतेकामं । तंतंप्राप्नोतिनिश्चितं ॥ ६ ॥ काम्यानांका-
मधेनुर्वै । कल्पितेकल्पपादपः ॥ चिंतामणिश्चिंतितस्य । सर्व-
मंगलकारकं ॥ ७ ॥ लिखित्वापूजयेद्यस्तु । मोक्षश्रियमवाप्नु-
यात् ॥ गुरुभक्तिर्विशेषेण । जायतेहृदिसर्वदा ॥ ८ ॥ जपंति
शाक्ताःसौराश्चगाणपत्याश्चवैष्णवाः ॥ शैवाःपाशुपताःसर्वे ।
सत्यंसत्यंनसंशयः ॥ ९ ॥ अथकाम्यजपस्थानं । कथयामिव-
रानने ॥ सागरांतेसरित्तीरे । तीर्थेहरिहरालये ॥ २१० ॥ श-
क्तिदेवालयेगोष्ठे । सर्वदेवालयेशुभे ॥ वटस्यधात्र्यामूलेवा ।
मठेवृंदावनेतथा ॥११ ॥ पवित्रेनिर्मलेदेशे । जपानुष्ठानतोऽपि-
वा ॥ निर्वेदनेनमौनेन । जपंस्तोत्वंसमारभेत् ॥ १२ ॥ जाप्ये-
नजयमाप्नोति । जपसिद्धिंफलंतथा ॥ हीनकर्मत्यजेत्सर्वं । ग-
र्हितस्थानमेवच ॥१३॥ श्मशानभयभूमौवा । वटमूलेचकान-

ने ॥ सिद्ध्यंतिकाननकेमूले । चूतवृक्षस्यसन्निधौ ॥१४॥ पीता-
सनंमोहनेतु । ह्यसितंचाभिचारिके ॥ ज्ञेयंशुक्लंचशांत्यर्थं । वश्ये
रक्तंप्रकीर्तितं ॥ २१५ ॥ जपंहीनासनंकुर्वन् । हीनकर्मफलप्र-
दं ॥ गुरुगीतांप्रयाणेवा । संग्रामेरिपुसंकटे ॥ १६ ॥ जपन्जय-
मवाप्नोति । मरणेमुक्तिदायिकां ॥ सर्वकर्माणिसिद्ध्यंति । गुरु-
पुत्रेनसंशयः॥१७॥ गुरुमंत्रोमुखेयस्य । तस्यसिद्ध्यंतिनान्यथा॥
दीक्षयासर्वकर्माणि । सिद्ध्यंतिगुरुपुत्रके ॥ १८ ॥ भवमूलवि-
नाशाय । चाष्टपाशनिवृत्तये ॥ गुरुगीतांभसिस्नानं । तत्त्वज्ञः
कुरुतेसदा ॥ १९ ॥ सएवसद्गुरुःसाक्षात् । सदसद्ब्रह्मवित्तमः ॥
तस्यस्थानानिसर्वाणि । पवित्राणिनसंशयः ॥ २२० ॥ स-
र्वशुद्धःपवित्रोऽसौ । स्वभावाद्यत्रतिष्ठति ॥ तत्रदेवगणाःसर्वे ।
क्षेत्रपीठेचरंतिच ॥२१॥ आसनस्थाःशयानावा । गच्छंतास्तिष्ठतोऽ- १५
पिवा ॥ अश्वारूढागजारूढाः । सुषुप्ताजाग्रतोऽपिवा ॥ २२ ॥

शुचिर्भूताज्ञानवंतो । गुरुगीतांजपंतिये॥ तस्यदर्शनसंस्पर्शात् ।
पुनर्जन्मनविद्यते ॥ २३ ॥ समुद्रेवैयथातोयं । क्षीरेक्षीरंजलेज-
लम् ॥ भिन्नेकुंभेयथाकाशं । तथात्मापरमात्मनि ॥ २४ ॥ त-
थैवज्ञानवान्जीवः । परमात्मनिसर्वदा ॥ ऐक्येनरमतेज्ञानी ।
यत्रकुत्रदिवानिशं ॥ २५ ॥ एवंविधोमहायुक्तो ।
सर्वत्रवर्त्ततेसदा ॥ तस्मात्सर्वप्रकारेण । गुरुभक्तिंसमाचरेत्
॥२६॥ गुरुसंतोषणादेव । मुक्तोभवतिपार्वति ॥ अणिमादिषुभो-
क्तृत्वं । कृपयादेविजायते ॥२७॥ साम्येनरमतेज्ञानी । दिवावाय-
दिवानिशी ॥ एवंविधोमहामौनी । त्रैलोक्यसमतांव्रजेत् ॥
॥ २८ ॥ अथसंसारिणः सर्वे । गुरुगीताजपेनतु ॥ सर्वान्का-
मांस्तुभुंजंति । त्रिसत्यंममभाषितं ॥ २९ ॥ सत्यंसत्यंपुनःसत्यं ।
धर्मसांख्यंमयोदितं ॥ गुरुगीतासमंस्तोत्रं ॥ नास्तितत्त्वंगुरोः ६
परं ॥ २३० ॥ गुरुर्देवोगुरुर्धर्मो । गुरुनिष्ठापरंतपः ॥ गुरोःपरतरं

नास्ति ॥ त्रिवारंकथयामिते ॥ ३१ ॥ धन्यामातापिताधन्यो ॥
गोत्रंधन्यंकुलोद्भवः ॥ धन्याचवसुधादेवि । यत्रस्याद्गुरुभक्तता ॥
॥ ३२ ॥ आकल्पजन्मकोटीनां । यज्ञव्रततपःक्रियाः ॥ ताः
सर्वाःसफलादेवि । गुरुसंतोषमात्रतः ॥ ३३ ॥ शरीरमिंद्रियंप्रा-
णम् । अर्थस्वजनबंधुता॥ मातुःकुलं पितृकुलं। गुरुमेवपरंस्मरेत् ॥
॥ ३४ ॥ मंदभाग्याह्यशक्ताश्च । येजनानानुमन्वते ! गुरुसे-
वासुविमुखाः । पच्यंतेनरकेऽशुचौ ॥ ३५ ॥ विद्याधनंबलंचैव ।
तेषांभाग्यंनिरर्थकं ॥ एषांगुरुकृपानास्ति । अधोगच्छंतिपार्वति
॥ ३६ ॥ ब्रह्माविष्णुश्चरुद्रश्च । देवाश्चपितृकिंन्नराः ॥ सिद्ध-
चारणयक्षाश्च । अन्येचमुनयोजनाः ॥ ३७ ॥ गुरुभावःपरंती-
र्थं। अन्यतीर्थंनिरर्थकं । सर्वतीर्थमयंदेवि । श्रीगुरोश्चरणांबुजं ॥
॥ ३८ ॥ कन्याभोगरतामंदाः । स्वकांतायाःपराङ्मुखाः ॥
अतःपरंमयादेवि । कथितंनममप्रिये ॥ ३९ ॥ इदंरहस्यमस्पष्टं

वक्तव्यंचवरानने ॥ सुगोप्यंचतवाग्रेतु ममात्मप्रीतयेसति ॥
॥ ४० ॥ स्वामिमुख्यगणेशाद्यान् । वैष्णवादींश्चपार्वति ॥ न
वक्तव्यंमहामाये । पादस्पर्शंकुरुष्वमे ॥ ४१ ॥ अभक्तेवंचकेधू-
र्ते । पाषंडेनास्तिकादिषु ॥ मनसापिनवक्तव्या । गुरुगीताक-
दाचन ॥ ४२ ॥ गुरवोबहवःसंति । शिष्यवित्तापहारकाः ॥ त-
मेकंदुर्लभंमन्ये । शिष्यहृत्तापहारकं ॥ ४३ ॥ चातुर्यवान्विवेकी
च । अध्यात्मज्ञानवान्शुचिः ॥ मानसंनिर्मलंयस्य । गुरुत्वंतस्य
शोभते ॥ ४४ ॥ गुरवोनिर्मलाः शांताः । साधवोमितभाषिणः
॥ कामक्रोधविनिर्मुक्ताः । सदाचाराजितेंद्रियाः ॥ ४५ ॥ कृ-
तायागुरुभक्तेस्तु । वेदशास्त्रानुसारतः ॥ मुच्यतेपातकाद्घोरात् ।
गुरुभक्तोविशेषतः ॥२४६॥ दुः संगंचपरित्यज्य । पापकर्मपरित्य-
जेत् ॥ चित्तचिन्हमिदंयस्य । तस्यदीक्षाविधीयते ॥४७॥ चि-
त्तत्यागानियुक्तश्च । क्रोधगर्वविवर्जितः ॥ द्वैतभावपरित्यागी ।

नास्ति ॥ त्रिवारंकथयामिते ॥ ३१ ॥ धन्यामातापिताधन्यो ॥
गोत्रंधन्यंकुलोद्भवः ॥ धन्याचवसुधादेवि । यत्रस्याद्गुरुभक्तता ॥
॥ ३२ ॥ आकल्पजन्मकोटीनां । यज्ञव्रततपःक्रियाः ॥ ताः
सर्वाःसफलादेवि । गुरुसंतोषमात्रतः ॥ ३३ ॥ शरीरमिंद्रियंप्रा-
णम् । अर्थस्वजनबंधुता॥ मातुःकुलं पितृकुलं। गुरुमेवपरंस्मरेत् ॥
॥ ३४ ॥ मंदभाग्याह्यशक्ताश्च । येजनानानुमन्वते ! गुरुसे-
वासुविमुखाः । पच्यंतेनरकेऽशुचौ ॥ ३५ ॥ विद्याधनंबलंचैव ।
तेषांभाग्यंनिरर्थकं ॥ एषांगुरुकृपानास्ति । अधोगच्छंतिपार्वति
॥ ३६ ॥ ब्रह्माविष्णुश्चरुद्रश्च । देवाश्चपितृकिंनराः ॥ सिद्ध-
चारणयक्षाश्च । अन्येचमुनयोजनाः ॥ ३७ ॥ गुरुभावःपरंती-
र्थं । अन्यतीर्थंनिरर्थकं । सर्वतीर्थमयंदेवि । श्रीगुरोश्चरणांबुजं ॥
॥ ३८ ॥ कन्याभोगरतामंदाः । स्वकांतायाःपराङ्मुखाः ॥
अतःपरंमयादेवि । कथितंनममप्रिये ॥ ३९ ॥ इदंरहस्यमस्पष्टं

वक्तव्यंचवरानने ॥ सुगोप्यंचतवाग्रेतु ममात्मप्रीतयेसति ॥
॥ ४० ॥ स्वामिमुख्यगणेशाद्यान् । वैष्णवादींश्चपार्वति ॥ न
वक्तव्यंमहामाये । पादस्पर्शंकुरुष्वमे ॥ ४१ ॥ अभक्तेवंचकेधू-
र्ते । पाषंडेनास्तिकादिषु ॥ मनसापिनवक्तव्या । गुरुगीताक-
दाचन ॥ ४२ ॥ गुरवोबहवःसंति । शिष्यवित्तापहारकाः ॥ त-
मेकंदुर्लभंमन्ये । शिष्यहृत्तापहारकं ॥ ४३ ॥ चातुर्यवान्विवेकी
च । अध्यात्मज्ञानवान्शुचिः ॥ मानसंनिर्मलंयस्य । गुरुत्वंतस्य
शोभते ॥ ४४ ॥ गुरवोनिर्मलाः शांताः । साधवोमितभाषिणः
॥ कामक्रोधविनिर्मुक्ताः । सदाचाराजितेंद्रियाः ॥ ४५ ॥ कृ-
तायागुरुभक्तेस्तु । वेदशास्त्रानुसारतः ॥ मुच्यतेपातकाद्धोरात् ।
गुरुभक्तोविशेषतः ॥२४६॥ दुः संगंचपरित्यज्य । पापकर्मपरित्य-
जेत् ॥ चित्तचिन्हमिदंयस्य । तस्यदीक्षाविधीयते ॥४७॥ चि-
त्तत्यागानियुक्तश्च । क्रोधगर्वविवर्जितः ॥ द्वैतभावपरित्यागी ।

तस्यदीक्षाविधीयते ॥४८॥ एतल्लक्षणयुक्तत्वं । सर्वभूतहितेरतं ॥
निर्मलंजीवितंयस्य । तस्यदीक्षाविधीयते॥४९॥ क्रिययाचान्वितं
पूर्वं दीक्षाजालंनिरूपितं ॥ मंत्रदीक्षाभिधंसांगोपांगंसर्वंशिवो-
दितं॥२५०॥ क्रियायासादिरहितां । गुरुसायुज्यदायिनीं । गुरु-
दीक्षांविनाकोवा । गुरुत्वाचारपालकः ॥ ५१ ॥ शक्तोनचापिश-
क्तोवा । दैशिकांघ्रिसमाश्रयात् ॥ तस्यजन्मास्तिसफलं । भोगमो-
क्षफलप्रदं ॥५२॥ अत्यंतचित्तपक्कस्य । श्रद्धाभक्तियुतस्यच ।
प्रवक्तव्यमिदंदेवि । ममात्मप्रीतयेसदा ॥ ५३ ॥ सच्चिदानंद
रूपाय । व्यापिनेपरमात्मने ॥ नमःश्रीगुरुनाथाय । प्रकाशानं
दमूर्तये ॥ ५४ ॥ सत्यानंदस्वरूपाय । बोधैकसुखकारिणे ॥
नमोवेदांतवेद्याय । गुरवेबुद्धिसाक्षिणे ॥ ५५ ॥ नमस्ते नाथभ-
गवन् । शिवायगुरुरूपिणे ॥ विद्यावतारसंसिद्ध्यै । स्वीकृताने- १७
कविग्रह ॥ ५६ ॥ नवायनवरूपाय । परमार्थैकरूपिणे ॥ सर्वा-

ज्ञानतमोभेद । भानवेचिद्धनायते ॥ ५७ ॥ स्वतंत्रायदयाक्लृ-
प्त । विग्रहायशिवात्मने ॥ परतंत्रायभक्तानां । भव्यानांभव्य-
रूपिणे ॥ ५८ ॥ विवेकिनांविवेकाय । विमर्शायविमर्शिनां ॥
प्रकाशिनांप्रकाशाय । ज्ञानिनांज्ञानिरूपिणे ॥ ५९ ॥ पुरस्ता-
त्पार्श्वयोःपृष्ठे । नमस्कुर्यादुपर्यधः ॥ सदामच्चित्तरूपेण । विधे-
हिभवदासनं ॥ ६० ॥ श्रीगुरुंपरमानंदं । वंदेआनंदविग्रहं ॥
यस्यसंन्निधिमात्रेण । चिदानंदायतेनमः ॥ ६१ ॥ नमोस्तुगुर-
वेतुभ्यं । सहजानंदरूपिणे ॥ यस्यावागमृतंहंति । विषंसंसार-
संज्ञकं ॥ ६२ ॥ नानायुक्त्युपदेशेन । तारिताशिष्यसंततिः ॥
तत्कृपासारवेदेन । गुरुचित्पदमच्युतं ॥ ६३ ॥ अच्युतायनम-
स्तस्मै । गुरवेपरमात्मने ॥ स्वाशमोक्तपदेच्छूनां । दत्तंयेना-
च्युतंपदं ॥६४॥ नमोऽच्युतायगुरवे । ऽज्ञानध्वांतैकभानवे ॥ शि-
ष्यसन्मार्गपटवे । कृपापीयूषसिंधवे ॥ ६५ ॥ ॐअच्युतायगु-

रवे । शिष्यसंसारहेतवे ॥ भक्तकार्यैकसिंहाय । नमस्तेचित्सुखा-
त्मने ॥६६॥ गुरुनामसमंदैवं । नपितानचबांधवाः ॥ गुरुनाम-
समःस्वामी । नेदृशंपरमंपदं ॥६७॥ एकाक्षरप्रदातारं । योगुरुंनै-
वमन्यते ॥ श्वानयोनिशतंगत्वा । चांडालेष्वपिजायते ॥६८॥
गुरुत्यागाद्भवेन्मृत्युः । मंत्रत्यागाद्दरिद्रता ॥ गुरुमंत्रपरित्यागी ।
रौरवंनरकंव्रजेत् ॥ ६९ ॥ शिवक्रोधाद्गुरुस्त्राता । गुरुक्रोधाच्छि-
वोनहि ॥ तस्मात्सर्वप्रयत्नेन । गुरोराज्ञांनलंघयेत् ॥ २७० ॥
संसारसागरसमुद्धरणैकमंत्रं । ब्रह्मादिदेवमुनिपूजितसिद्धमंत्रं ॥
दारिद्र्यदुःखभवरोगविनाशमंत्रं । वंदेमहाभयहरंगुरुराजमंत्रं ॥
॥७१॥ सप्तकोटिमहामंत्राः । चित्तविभ्रंशकारकाः ॥ एकएवपरो
मंत्रो । गुरुरित्यक्षरद्वयं ॥ ७२ ॥ यस्यप्रसादादहमेवसर्वं । म-
य्येवसर्वंपरिकल्पितंच ॥ इत्थंविजानामिसदात्मरूपं । तस्यांघ्रि-
पद्मंप्रणतोऽस्मिनित्यं ॥७३॥ अज्ञानतिमिरांधस्य । विषयाक्रां-

तचेतसः ॥ ज्ञानप्रभाप्रदानेन । प्रसादंकुरुमेप्रभो ॥ २७४ ॥
इतिश्रीस्कंदपुराणेउत्तरखंडेउमामहेश्वरसंवादेगुरुगीतासमाप्ता ॥
श्रीमत्सच्चित्सुखानंदसद्गुरुमूर्त्यर्पणमस्तु ॥ श्रीशिवमंगलरूपार्पणमस्तु ॥ ॥ ॥

हें पुस्तक पुणें पेठ शनवार मेहुणपुरा येथें रावजी श्रीधर गोंधळेकर यांनीं आपले जगद्धितेच्छु छापखान्यांत छापून पुणें येथें प्रसिद्ध केलें.

शके १८२७.

आवृत्ति ४ थी.

